# ॥ श्रीहनुमच्चत्वारिंशिका ॥

प्रणेतारः – महाकविमहामहोपाध्यायश्रीचित्रकूटतुलसीपीठाधीश्वर-
जगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यमहाराजाः

श्रीगुरुपदपङ्कजनखज्योतिर्मनसि निधाय ।
हनुमच्चत्वारिंशिकां गृणे हरिं प्रणिधाय ॥
अथ सीतापतिचरणरतहनुमन्तं प्रणमामि ।
देहि रामपदरतिमहं त्वामिह शरणं यामि ॥
जय हनुमन्मतिमन्दिरसुन्दर । जय रिपुकटकपयोनिधिमन्दर ॥ १ ॥
जय धृतराघवमानसधामन् । भूविश्रुतमारुतसुतनामन् ॥ २ ॥
जय मण्डितरणरङ्ग कृपालो । रामदूत जय दीनदयालो ॥ ३ ॥
जयतु कनकगिरिसदृशशरीरः । वेगिविडम्बितगरुडसमीरः ॥ ४ ॥
शिवविग्रहपूजितरघुवीरः । ब्रह्मचर्यरतसंयमधीरः ॥ ५ ॥
वन्दे वन्दिचरणजलजातम् । आञ्जनेयभवसत्कृतवातम् ॥ ६ ॥
धृतकलकुण्डललसदुपवीतः । कुञ्चितकुन्तलपरमविनीतः ॥ ७ ॥
खलमदहरकर्कशलाङ्गूलम् । सततं जनयति रिपुहृदि शूलम् ॥ ८ ॥
चन्द्रवदनबलनिधिभुजदण्डः । वक्षःस्थलवरपविनखचण्डः ॥ ९ ॥
रोमरोमप्रतिलेखितरामः । वज्रदेहपूरितजनकामः ॥ १० ॥
प्रबलपराक्रमविषमकरालः । महाकालमदहरखलकालः ॥ ११ ॥
केसरिनन्दनजनसुखदायी । मानसकथासुधारसपायी ॥ १२ ॥
राघवचरवरमोदविधाता । सीतान्वेषकवानरत्राता ॥ १३ ॥
सुरसासिंहिकादिमदहर्ता । कौतुकजलनिधिलङ्घनकर्ता ॥ १४ ॥
दुष्टलङ्किनीकैतवहर्ता । भक्तविभीषणतोषणकर्ता ॥ १५ ॥
दृष्टविरहरतकृषतनुसीतः । दत्तमुद्रिकानाशितचिन्तः ॥ १६ ॥
श्रुत्वा रामकुशलमथ सीता । त्वामाशिषामोदयदभीता ॥ १७ ॥
जयत्यशोकविपिनश्रीहर्ता । अक्षविमर्दनखलसंहर्ता ॥ १८ ॥
कृतघननादशक्तिमदनाशः । अङ्गीकृतरावणसुतपाशः ॥ १९ ॥
दशमुखबोधकविगताशङ्कः । पुच्छहुताशनदाहितलङ्कः ॥ २० ॥
सीतातोषणधृतलघुरूपः । स्वीकृतचूडामणिकपिभूपः ॥ २१ ॥
तीर्णवारिनिधिमोदितकीशः । प्रमुदितविहितकोसलाधीशः ॥ २२ ॥

परिष्वज्य हनुमन्तं रामः । बहुप्रशंससजलघनश्यामः ॥ २३ ॥
जयति सुकण्ठशोकभयनाशी । जयति विभीषणभाग्यविकाशी ॥ २४ ॥
जयति पदाश्रितसेवकपाता । शाब्दिकमणिसामश्रुतिगाता ॥ २५ ॥
कालनेमिमकरीसंहारी । लक्ष्मणजीवनजनभयहारी ॥ २६ ॥
रामचन्द्रसुखसिन्धुनिशेशः । विकलभरतजलजातदिनेशः ॥ २७ ॥
जयति पवनसुत घातितवाली । महावीर बलविक्रमशाली ॥ २८ ॥
जय नतसुरवर जय वानरचर । जय रणकर्कश जय राघवचर ॥ २९ ॥
जय सीतासुत विशदपराक्रम । जय हृतभक्तशोकसंशयभ्रम ॥ ३० ॥
जय रघुवीरपयोधरचातक । जय कपीश दशमुखकुलघातक ॥ ३१ ॥
यातुधानकुलकमलतुषारः । रामचन्द्रजनजीवनसारः ॥ ३२ ॥
सीताशोकपयोधरवायुः । सकलसिद्धिदाता दीर्घायुः ॥ ३३ ॥
रामभक्तिनिधिभाण्डागारम् । नौमि कृताञ्जलिपवनकुमारम् ॥ ३४ ॥
रामकथारसरसिकमुदारम् । नौमि विरतिरतिगेहमपारम् ॥ ३५ ॥
शरणागतवत्सल कपिदेव । द्रवतु शिशौ मयि कृतप्रभुसेव ॥ ३६ ॥
तारय पापपयोनिधिलीनम् । कीश पाहि मां शिशुमतिदीनम् ॥ ३७ ॥
कुटिलकुभाग्यकुमतिकुसमाजम् । पाहि कपीश पापिकुलराजम् ॥ ३८ ॥
जय जय जय हनुमन्सुखसिन्धो । दयां विधेहि प्रणतजनबन्धो ॥ ३९ ॥
गिरिधरमेनमभाग्यमनाथम् । दृष्ट्वा दर्शय रघुकुलनाथम् ॥ ४० ॥
रामदूत पवमानसुत दत्तभक्तविश्राम ।
सीतारामयुतो विहर गिरिधरहृदि अभिराम ॥
हनुमच्चत्वारिंशिकामिमां पठतु यदि कोऽपि ।
गिरिधरगीतां रामपदरतिं याति किल सोऽपि ॥